श्रीगणेशाय नमः॥ राजोवाच॥ भगवन्नवतारास्ते चरितं कथितास्त्वयो
दिताः। एतेषां प्रकृतिं ब्रह्मन् प्रधानं वक्तुमर्हसि ॥१॥ आराध्यं यन्मया दे
व्याः स्वरूपं येन तद्द्विज॥ विधिना ब्रूहि सकलं यथावत्प्रणतस्य मे॥२॥
ऋषिरुवाच इदं रहस्यं परममनाख्येयं प्रचक्षते॥ भक्तोसीति न
॥१॥ मे किंचित्तवाच्यं नराधिप॥३॥ सर्वस्याद्या महालक्ष्मीस्त्रिगु ॥१॥
णा परमेश्वरी॥ लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थि
ता॥४॥ मातुलिंगं गदां खेटं पानपात्रं च बिभ्रती॥ नागं लिंगं च
योनिं च बिभ्रती नृप मूर्धनि॥५॥ तप्तकांचनवर्णाभा तप्त
कांचनभूषणा शून्यं तदखिलं स्वेन पूरयामास तेजसा॥६॥

कर्माणि तेज्ञात्वायोऽधीते सोऽश्नुते सुखम् ॥१३॥ तामित्युक्त्वा महालक्ष्मीः
स्वरूपमपरं नृप ॥ सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ ॥१४॥ अ
क्षमालांकुशधरा वीणापुस्तकधारिणी ॥ सा बभूव वरा नारी ना
२ मान्यस्यै च सा ददौ ॥१५॥ महाविद्या महावाणी भारती वाक्सरस्
ती ॥ आर्या ब्राह्मी महाधेनुर्वेदगर्भा च धीश्वरी ॥१६॥ अथोवाच २
2 महालक्ष्मीर्महाकालीं सरस्वतीम् ॥ युवां जनयतं देव्यौ मिथुने
स्वानुरूपतः ॥१७॥ इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयं
हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ॥१८॥ ब्रह्मन्विधे वि
रंचेति धातरित्याह तं नरम् ॥ श्रीः पद्मे कमले लक्ष्मी त्याह

शून्यं तमखिलं लोकं विलोक्य परमेश्वरी ॥ बभार रूपमपरं तमसा केव
लेन हि ॥७॥ सा भिन्नांजनसंकाशा दंष्ट्रांचितवरानना ॥ विशाललो
चना नारी बभूव तनुमध्यमा ॥८॥ खड्गपात्रशिरःखेटैरलंकृत
चतुर्भुजा ॥ कबंधहारं शिरसा विभ्राणा हि शिरःस्रजम् ॥९॥ सा
प्रोवाच महालक्ष्मीं तामसी प्रमदोत्तमा ॥ नाम कर्म च मे मातर्देहि
तुभ्यं नमो नमः ॥१०॥ तां प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमा
म् ॥ ददामि तव नामानि यानि कर्माणि तानि च ॥११॥ महामाया म
हाकाली महामारी क्षुधा तृषा ॥ निद्रा तृष्णा चैकवीरा कालरात्रिर्दुर

त्यया ॥१२॥ इमानि तव नामानि प्रतिपाद्यानि नामभिः ॥ एभिः

वरदां वासुदेवाय च श्रियम् ॥२६॥ स्वरूपा सह संभूय विरंच्योऽदमजीजनत्
विभेद भगवान् रुद्रस्तद्दोर्भ्यां सह वीर्यवान् ॥२७॥ अंडमध्ये प्रधानादि
कार्यजातमभून्नृप ॥ महाभूतात्मकं सर्वं जगत्स्थावरजंगमम् ॥२८
पुपोष पालयामास तत्त्वत्स्या सह केशवः ॥ महालक्ष्मीरेवमजा राजन्
३ 3 सर्वेश्वरेश्वरी ॥२९॥ निराकारा च साकारा सैव नानाभिधानभृत् ३
नामांतरैर्निरूप्यैषा नाम्ना नान्येन केनचित् ॥३०॥ इति मायाप्रा
धानिकं नाम ॥१४ ऋषिरुवाच त्रिगुणा तामसी देवी सात्विकी या
त्रिधोदिता ॥ सा सर्वा चंडिका दुर्गा भद्रा भगवती र्यते ॥१॥ योगनि
द्रा हरेरुक्ता महाकाली तमोगुणा ॥ मधुकैटभनाशार्थं यां तुष्टा

मातास्त्रिपं चतानम् ॥१९॥ महाकाली भारती चमिपुनेसजतःस्तह॥ एतयोर्
पितृपाणि॥ नामानि चवदामिते ॥२०॥ नीलकंठं रक्तबाहुं श्वेतांगं चन्द्रशे
खरम् ॥ जनपामासप्रतुषं महाकाली सितां स्त्रियम् ॥२१॥ मनुद्रःशं
करः स्पाणुः कपर्दीचत्रिलोचनः॥ त्रयीविद्या कामधेनुः सास्त्री भा
षाक्षरा स्वरा ॥२२॥ सरस्वतीस्त्रियं गौरीं कृष्णंचपुरुषंन्नृप ॥ जनयाः
मास नामानि तयोरपिवदामिते ॥२३॥ विष्णुः कृष्णो हृषीकेशो वासु
देवोजनार्दनः उमागौरीसतीचंडीसुन्दरीशुभगाशुभा ॥२४॥ एवं
युवतयःसत्यः पुरुषत्वंप्रपेदिरे ॥ चक्षुष्मंतोपिपश्यंति नेतरेतद्विदोजु

नाः ... गौरीं

पूज्या सा सहस्रभुजा सती आयुधान्यत्र वक्ष्यंते दक्षिणाधः करः क्रमात्
॥१०॥ अक्षमाला च कमलं बाणोसिः कुलिशं गदा ॥ चक्रं त्रिशूलं परशु
शुः शंखो घंटा च पाशकः ॥११॥ शक्तिर्दंडश्च मे चापं पानपात्रं कमंड
लुः ॥ अलंकृत भुजा मे भिरायुधैः कमलासनाम् ॥१२॥ सर्वदेवम
४ यीमीशां महालक्ष्मीमिमां नृप ॥ पूजयेत्स सर्वलोकानां स देवानां ४
५ प्रभुर्भवेत् ॥१३॥ गौरीदेहात्समुत्पन्ना या सत्वैकगुणाश्रिता ॥
साक्षात्सरस्वती प्रोक्ता शुंभासुरनिबर्हणी ॥१४॥ दधौ साष्टभु
जा बाणमुशले शूलचक्रभृत् ॥ शंखं घंटां लांगलं च कार्मुकं च
सुधाधिप ॥१५॥ एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति ॥ निशुं

यांबुजाशनः॥२॥दशवक्रादशभुजादशपादांजनप्रभा ॥विशालयारा
जमानात्रिंशल्लोचनमालया॥३॥स्फुरद्दशनदंष्ट्रासाभीमरूपापि
भूमिप॥रूपसौभाग्यकांतीनांसंप्रतिष्ठामहाश्रियम्॥४॥खड्गबाणग
दाशूलचक्रचापभुशुंडिभृत्॥परिघंकार्मुकंशीर्षंनिश्च्योतद्रुधि
रंदधौ॥५॥एषासावैष्णवीमाया महाकालीदुरत्यया॥आरा
धितावशीकुर्यात्पूजाकर्तुश्चराचरम्॥६॥सर्वदेवशरीरे
भ्योयाविर्भूतामितप्रभा॥त्रिगुणासामहालक्ष्मीःसाक्षान्महिष
मर्दिनी॥७॥श्वेताननानीलभुजासुश्वेतस्तनमंडला॥र

मध्यारक्तपादानीलजंघोरुरुन्मदा॥८॥सुचित्रजघनाचित्रमाल्यांबरवि
भूषणा॥चित्रानुलेपनाकांतिरूपसौभाग्यशालिनी॥९॥अष्टादशभुजा

पूज्यास्तदानुद्रविनायकौ ॥ नमो देव्या इति स्तोत्रे महालक्ष्मीं समर्च्चये
त् ॥२३॥ अथ तारत्रयाद्यां पां स्तोत्रमंत्रास्तदाश्रयाः ॥ अष्टादशभु
जा चैषा पूज्या महिषमर्दिनी ॥२४॥ महालक्ष्मीर्महाकाली सैव प्रोक्ता
सरस्वती ॥ ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी ॥२५॥ महिषां
तकरी येन पूजिता स जगत्प्रभुः ॥ पूजयेद्जगतां धात्रीं चंडिकां भक्त
वत्सलाम् ॥२६॥ अर्घ्यादिभिरलंकारैर्गंधपुष्पैस्तथाक्षतैः ॥ धूपै
र्दीपैश्च नैवेद्यैर्नानाभक्ष्यसमन्वितैः ॥२७॥ रुधिराक्तेन बलिना
मांसेन सुरया नृप ॥ प्रणामाचमनीयैश्च चन्दनेन सुगंधिना ॥२८॥
सकर्पूरैश्च ताम्बूलैर्भक्तिभावसमन्वितैः ॥ वामभागेग्रतो देव्या

ममधनीदेवीशुंभासुरनिवर्हिणी ॥१६॥ इत्युक्तानि स्वरूपाणि मूर्त्तीनां तव पार्थिव ॥ उपासनं जगन्मातुः पृथगासां निशामय ॥१७॥ महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती ॥ दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुनत्रयम् ॥१८॥ विरंचिः स्वरया मध्ये रुद्रो गौर्या च दक्षिणे ॥ वामे लक्ष्म्या हृषीकेशः पुरतो देवतात्रयम् ॥१९॥ अष्टादशभुजा मध्ये वामे चास्या दशानना ॥ दक्षिणेऽष्टभुजा लक्ष्मीर्महतीति समर्चयेत् ॥२०॥ अष्टादशभुजा चैषा यदा पूज्या नराधिप ॥ दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा ॥२१॥ कालमृत्यू च संपूज्यौ सर्वारिष्टप्रशांतये ॥ यदा चाष्टभुजा पूज्या शुंभासुरनिवर्हिणी ॥२२॥ न चास्याः शक्तयः

चात्मनि ॥ सुचिरं भावयेद्दीशां चण्डिकां तन्मयो भवेत् ॥३६॥ एवं
यः पूजयेद्भक्त्या प्रत्यहं परमेश्वरीम् ॥ भुक्त्वा भोगान्यथाकामं देवी
सायुज्यमाप्नुयात् ॥३७॥ यो न पूजयते नित्यं चण्डिकां भक्तवत्सला
म् ॥ भस्मीकृत्यास्य पुण्यानि निर्दहेत्तमपीश्वरी ॥३८॥ तस्मात्पू
 जय भूपाल सर्वलोकमहेश्वरीम् ॥ यथोक्तेन विधानेन चण्डि 
 कां स सुखमवाप्स्यसि ॥३९॥ इति माया वैकृतिकं नाम ॥
॥१५॥ ऋषिरुवाच ॥ नंदा भगवती नाम या भविष्यति नन्दजा ॥
स्तुता सा पूजिता भक्त्या वशीकुर्याज्जगत्त्रयम् ॥१॥ कनकोत्त
मकान्तिः सा सुकान्तिः कनकाम्बरा ॥ देवी कनकवर्णाभा कनको

रिछिन्नशीर्षमहासुरम् ॥२९॥ पूजयेन्महिषं येन प्राप्तं सा पूज्यमीशया ॥ दक्षिणोपरतः क्षिंहं समग्रं धर्ममीश्वरम् ॥३०॥ वाहनं पूजयेद्द्या व्याप्तं येन चराचरम् ॥ ततः कृताञ्जलिर्भूत्वा स्तुवीत चरितैरिमैः ॥३१॥ एकेन वा मध्यमेन नैकेनेतरयोरिह ॥ चरितार्द्धं न च जपेज्जपं [illegible]दुमवाप्नुयात् ॥३२॥ स्तोत्रमंत्रैः स्तुवीतैनां यदि वा जगदंबिकाम् ॥ प्रदक्षिणां नमस्कारं कृत्वा मूर्ध्नि कृताञ्जलिः ॥३३॥ क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतंद्रितः ॥ प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पि[illegible]षा ॥३४॥ जुहुयात्स्तोत्रमंत्रैर्वा चंडिकायै शुभं हविः ॥ नमो नमपदैर्देवीं पूजयेत्सुसमाहितः ॥३५॥ प्रयतः प्राञ्जलिः प्रह्वः प्राणानारोप्य

रक्तचामुण्डा देवी योगेश्वरीति च ॥९॥ अनया व्याप्तमखिलं जगत्स्था
वरजंगमम् ॥ इमां यः पूजयेद्भक्त्या स व्याप्नोति चराचरम् ॥१०॥ अधी
ते य इमं नित्यं रक्तदन्त्या वपुः स्तवम् ॥ तं सा परिचरेद्देवी पतिं प्रियमि
वांगना ॥११॥ शाकंभरी नीलवर्णा नीलोत्पलविलोचना ॥ गंभीर
नाभिस्त्रिवलीविभूषिततनूदरी ॥१२॥ सुकर्कशसमोत्तुंगवृत्तपी
नघनस्तनी ॥ मुष्टिं शिलीमुखापूर्णं कमलं कमलालया ॥१३॥
पत्रंपुष्पंफलंमूलं बिभ्रती शाकसंचयम् ॥ काम्यानंतरसैर्युक्तं क्षु
त्तृन्मृत्युजरापहम् ॥१४॥ कार्मुकं च स्फुरत्कांति बिभ्रती परमेश्वरी
शाकंभरी शताक्षी सा सैव दुर्गा प्रकीर्तिता ॥१५॥ उमा गौरी सती च

त्नभूषणा ॥२॥ कमलांकुशपाशाब्जैरलंकृतचतुर्भुजा ॥ इन्दिरा कमला
लक्ष्मीः सा श्री रुक्मांबुजासना ॥३॥ या रक्तदंतिका नाम देवी प्रोक्ता मया
नघ ॥ तस्याः स्वरूपं वक्ष्यामि शृणु सर्वभयापहम् ॥४॥ रक्तांबरा रक्तव
र्णा रक्तसर्वांगभूषणा ॥ रक्तायुधा रक्तनेत्रा रक्तकेशातिभीषणा ॥
॥५॥ रक्ततीक्ष्णनखा रक्तदशना रक्तदंतिका ॥ पतिं नारीवानुर
क्ता देवी भक्तं भजेज्जनम् ॥६॥ वसुधेव विशाला सा सुमेरुयुगस
स्तनी ॥ दीर्घौ लंबावतिस्थूलौ तावतीव मनोरमौ ॥७॥ कर्कशाव
तिकांतौ तौ सर्वानन्दपयोनिधी ॥ भक्तान्संपाययेद्देवी सर्वकाम
दुघौ स्तनौ ॥८॥ खड्गं पात्रं च मुशलं लांगलं च बिभर्ति सा ॥ आख्याता

डी कालिका सातु पार्वती ॥ शाकंभरीं स्तुवन् ध्यायन् जपन् संपूजयन्न
मन् ॥१६॥ अक्षय्यमश्नुते शीघ्रमन्नपानामृतं फलम् ॥ भीमापि नी
लवर्णौवदं ष्ट्रादशनभासुरा ॥१७॥ विशाललोचना नारी वृत्तपीन
पयोधरा ॥ चन्द्रहासं च डमरुं शिरःपात्रं च बिभ्रती ॥१८॥ एकवीरा
कालरात्रिः सैवोक्ता कामदा स्तुता ॥ तेजोमंडलदुर्धर्षा भ्रामरी चित्र
कांतिभृत् ॥१९॥ चित्रभ्रमरपाणिः सा महामारीति गीयते ॥ इत्येते
मूर्त्तयो देव्या व्याख्याता वसुधाधिप ॥२०॥ जगन्मातुश्चण्डिकायाः
कीर्तिताः कामधेनवः ॥ इदं रहस्यं परमं न वाच्यं कस्यचित्त्वया ॥२१॥
व्याख्यानं दिव्यमूर्तीनामधीष्वावहितः स्वयम् ॥ यत्नुत्वा सर्वपा
पेभ्यो मुच्यते नात्र संशयः ॥२२॥ इति मार्कंडेयपुराणे देव्या मूर्तिरहस्यं



षोडशोऽध्यायः ॥१६